॥ ॐ नमो भगवते वेदेश्वराय ॥



# ॥ श्रीवेद-पाद-स्तोत्रम् ॥



॥ ॐ ॥

# ॥ वेदोऽखिलो धर्म-मूलम् ॥

'यस्य निःश्वसितं वेदाः ...' इति वचनेन वेदानां परमेश्वरत्वम् आर्य-सनातन-वैदिक-धर्म-विश्वस्य परमं, श्रद्धा-स्थानम्। 'वेदो नित्यम् अधीयताम्....' इति भगवत्-पूज्यपादाज्ञया समस्तं धार्मिकं विश्वं 'स्वाध्यायोऽध्येतव्यः....' इति धर्माज्ञां सर्वाद्य-कर्तव्यत्वेन परिपालयितुं यथाशक्ति यथामति च प्रयत्नशीलम् अनुभूयते। अस्यां दिशि कोटा-निवासिभिः पण्डितोत्तमैः श्री.ऐताल पद्मनाभाचार्यैः 'वेद-सेवा'त्वेन प्रकाशन-दशां प्रापितं श्रीवेद-पाद-स्तोत्रं वेद-स्वाध्याय-निष्ठानां महत्तमोपकाराय सेत्स्यतीति द्रढीयान्नो विश्वासः। भगवान् वेदेश्वरः प्रकाशकानां सत्कार्यस्यास्य सत्फलतां वितरताद् इति नः प्रार्थना।

'शारदा'-संपादकः
झेलम, पत्रकारनगरी,
पुणे ४११०१६

गार्ग्यः पं.वसन्तशर्मा
देवदीपावली
२६.११.२०००

॥ ॐ नमो भगवते वेदेश्वराय ॥



# ॥ श्रीवेद-पाद-स्तोत्रम् ॥






==================================

सद्योजात-मानस-मन्दिरम्,
कोटातट्टु-पडुकेरे-कोटा (उडुपी-कर्णाटक) ५७६२२१
☎ : 08252-65097

==================================

# सद्योजातं प्रपद्यामि।

धर्मार्थ-काम-मोक्षाख्य-पुरुषार्थ-चतुष्टयम्।
ज्ञानं विना न लभते मानवो भोग-तत्परः॥ १

"ज्ञानं महेश्वरादिच्छेत्" –इति प्राहुर्मनीषिणः।
तस्य वेदैकवेद्यत्वं शास्त्रयोनित्व-सूत्रतः॥ २

स्पष्टमाह विजिज्ञासून् भगवान् बादरायणः।
शिक्षादिक-षडङ्गानां विनाभ्यासं न तत्त्वतः॥ ३

वेदार्थोऽपि न कस्यापि भाति बुद्धौ मनीषिणः।
सर्वमेतद्-विनिश्चित्य स जैमिनि-महामुनिः॥ ४

वेदपादान्त-घटितैः हृद्यैः पद्यैः सदाशिवम्।
स्तुत्वा नत्वाऽखिलान् कामान् लेभे च तदनुग्रहात्॥ ५

ईश-प्रेरणया तच्च स्तोत्रं सम्प्रति मुद्र्यते।
एतस्य पठनान्नित्यं चतुर्वेद-सहस्रकम्॥ ६

पठतो यत्फलं तत्स्यादिति चान्ते प्रकीर्तितम्।
सर्वे भक्त्यास्तवमिमं पठन्तु पाठयन्तु च॥ ७

तेन वेदार्थ-विज्ञान-सामर्थ्यं प्राप्य दुर्लभम्।
शान्तिं च परमामीयुरिति संप्रार्थयामहे॥ ८

○ ○ ○

॥ श्रीगणेशाय नमः ॥

# ॥ अथ श्रीवेद-पाद-स्तोत्र-प्रारम्भः ॥

ऋषय ऊचुः

पुण्डरीक-पुरं प्राप्य जैमिनिर्मुनिसत्तमः ।
किं चकार महायोगी सूत नो वक्तुमर्हसि ॥ १

सूत उवाच

भगवान् जैमिनिर् धीमान् पुण्डरीक-पुरे पुरा ।
महर्षि-सिद्ध-गन्धर्व-यक्ष-किन्नर-सेविते ॥ २

नृत्यद्भिर् अप्सरः संघैर् दिव्य-गानैश्च शोभिते ।
नृत्यन्तं परमीशानं ददर्श सदसि प्रभुम् ॥ ३

ननाम दूरतो दृष्ट्वा दण्डवत् क्षिति-मण्डले ।
पपावुत्थाय देवस्य ताण्डवाऽमृतमागलम् ॥ ४

पार्श्व-स्थितां महादेवीं पश्यन्तीं तस्य ताण्डवम् ।
दृष्ट्वा सुसंहृष्ट-मनाः पपात पुरतो मुनिः ॥ ५

ततः शिष्यान् समाहूय सर्व-शास्त्रार्थ-पारगान् ।
अग्निकेशमकेशं च शत-यागं जटाधरम् ॥ ६

वक्र-नासं समित्-पाणिं धूम-गन्धिं कुशासनम् ।
एतैः सार्धं महादेवं पूजयामास जैमिनिः ॥ ७

ततोऽपि वेद-वेदान्त-सारार्थं तत्प्रसादतः ।
कृताञ्जलिरुवाचेमं वेदान्त-स्तवमुत्तमम् ॥ ८

जैमिनिरुवाच।

ॐ विघ्नेश-विधि-मार्तण्ड-चन्द्रेन्द्रोपेन्द्र-वन्दित।
नमो गणपते तुभ्यं ब्रह्मणां ब्रह्मणस्पते॥ १

उमा-कोमल-हस्ताब्ज-सम्भावित-ललाटिकम्।
हिरण्य-कुण्डलं वन्दे कुमारं पुष्कर-स्रजम्॥ २

शिवं विष्णोश्च दुर्दर्शं नरः कस्तोतुमर्हति।
तस्मान्मत्तः स्तुतिः सेयमभ्राद् वृष्टिरिवाजनि॥ ३

नमः शिवाय साम्बाय नमः शर्वाय शम्भवे।
नमो नटाय रुद्राय सदसस्पतये नमः॥ ४

पाद-भिन्नाहि-लोकाय मौलिभिन्नाण्ड-भित्तये।
भुज-भ्रान्त-दिगन्ताय भूतानां पतये नमः॥ ५

क्वणन्-नूपुर-युग्माय विलसत्-कृत्ति-वाससे।
फणीन्द्र-मेखलायास्तु पशूनां पतये नमः॥ ६

काल-कालाय सोमाय योगिने शूलपाणये।
अस्थिभूषाय शुद्धाय जगतां पतये नमः॥ ७

पात्रे सर्वस्य जगतो नेत्रे सर्व-दिवौकसाम्।
गोत्राणां पतये तुभ्यं क्षेत्राणां पतये नमः॥ ८

शङ्कराय नमस्तुभ्यं मङ्गलाय नमोऽस्तु ते।
धनानां पतये तुभ्य॒मन्नाना॒ं पत॑ये॒ नम॑ः ॥ ९

अष्टाङ्गायातिहृष्टाय क्लिष्ट-भक्तेष्ट-दायिने।
इष्टिघ्रायेष्टितुष्टाय॒ पुष्टाना॒ं पत॑ये॒ नम॑ः ॥ १०

पञ्चभूताधिपतये कालाधिपतये नमः।
नम आत्माधिपतये दि॒शां च॒ पत॑ये॒ नम॑ः ॥ ११

विश्वकर्त्रे महेशाय विश्वभर्त्रे पिनाकिने।
विश्वहर्त्रेग्नि-नेत्राय॑ वि॒श्वरूपाय॒ वै नम॑ः ॥ १२

ईशान ते तत्पुरुष नमो घोराय ते सदा।
वामदेव नमस्तेस्तु स॒द्यो जा॒ताय॒ वै नम॑ः ॥ १३

भूति-भूषाय भक्तानां भीति-भङ्ग-रताय ते।
नमो भवाय भर्गाय॒ नमो॑ रु॒द्राय॑ मी॒ढुषे॑॥ १४

सहस्राङ्गाय साम्बाय सहस्राभीषवे नमः।
सहस्र-बाहवे तुभ्यं॑ सहस्रा॒क्षाय॑ मी॒ढुषे॑॥ १५

सुकपोलाय सोमाय सुललाटाय सुभ्रुवे।
सुदेहाय नमस्तुभ्यं॑ सुमृ॒ळीकाय॑ मी॒ढुषे॑॥ १६

भव-क्लेश-निमित्तोरु भवच्छेद-कृते सताम्।
नमस्तुभ्यमषा॑ह्लाय॒ सह॑मानाय वे॒धसे॑॥ १७

वन्देऽहं देवमानन्द-सन्दोहं लास्य-सुन्दरम्।
समस्त-जगतां नाथं सदसस्पतिमद्भुतम्॥ १८

सुजङ्घं सुन्दरं सूरुं सुकण्ठं सोम-भूषणम्।
सुगण्डं सुदृशं वन्दे सुगन्धिं पुष्टिवर्धनम्॥ १९

भिक्षाहारं हरित्-क्षौमं तक्षाभूषं क्षिति-क्षमम्।
यक्षेशेष्टं नमामीशमक्षरं परमं पदम्॥ २०

अर्धालकमवस्त्रार्धमस्थ्युत्पल-दल-स्रजम्।
अर्ध-पुंलक्षणं वन्दे पुरुषं कृष्णपिङ्गलम्॥ २१




सकृत्प्रणत-संसार-महासागर-तारकम्।
प्रणमामि तमीशानं जगतस्तस्थुषस्पतिम्॥ २२

धातारं जगतामीशं दातारं सर्व-सम्पदाम्।
नेतारं मरुतां वन्दे जेतारमपराजितम्॥ २३

तन्त्वामन्तक-हन्तारं वन्दे मन्दाकिनी-धरम्।
ततानि विदधे योयमिमानि त्रीणि विष्टपा॥ २४

सर्वज्ञं सर्वगं सर्वं कविं वन्दे तमीश्वरम्।
यतश्च यजुषा सार्धमृचः सामानि जज्ञिरे॥ २५

भवन्तं सुदृशं वन्दे भूतभव्यभवन्ति च।
त्यजन्तीतर-कर्माणि यो विश्वाभि विपश्यति॥ २६

हरं सुरनियन्तारं परन्तमहमानतः।
यदाज्ञया जगत्-सर्वं व्याप्य नारायणः स्थितः॥ २७

तन्नमामि महादेवं यन्नियोगादिदं जगत्।
कल्पादौ भगवान्धाता यथापूर्वमकल्पयत्॥ २८

ईश्वरन्तमहं वन्दे यस्य लिङ्गमहर्निशम्।
यजन्ते सह भार्याभिरिन्द्रज्येष्ठामरुद्-गणाः॥ २९

नमामि तमिमं रुद्रं यमभ्यर्च्य सकृत् पुरा।
अवापुः स्वं स्वमैश्वर्यं देवासः पूर्षरातयः॥ ३०

तं वन्दे देवमीशानं यं शिवं हृदयाम्बुजे।
सततं यतयः शान्ताः संजानाना उपासते॥ ३१

तदस्यै सततं कुर्मो नमः कमलकान्तये।
उमाकुच-पदोरस्का यातेरुद्र शिवातनूः॥ ३२

नमस्ते रुद्रभावाय नमस्ते रुद्रकेलये।
नमस्ते रुद्र-शान्त्यै च नमस्ते रुद्र मन्यवे॥ ३३

वेदाश्वरथ-निष्ठाभ्यां पादाभ्यां त्रिपुरान्तक।
बाण-कार्मुक-हस्ताभ्यां बाहुभ्यामुत ते नमः॥ ३४

ईशानं सकलाराध्यं वन्दे सम्पत्-समृद्धिदम्।
यस्य चासीद्धरिः शस्त्रं ब्रह्मा भवति सारथिः॥ ३५

नमस्ते वासुकिज्याय विष्फाराय च शंकर।
महते मेरुरूपाय् नमस्ते अस्तु धन्वंने॥ ३६

नमः परशवे देव शूलायानलरोचिषे।
हर्यग्नीन्द्रात्मने तुभ्यमुतोत् इषंवे नमः॥ ३७

सुरेतर-वधू-हारहारीणि हर यानि ते।
अन्यान्यस्त्राण्यहं तूर्णमिदं तेभ्योंकरं नमः॥ ३८

धराधरसुतालीला-सरोजाहत-बाहवे।
तस्मै तुभ्यमवोंचाम् नमों अस्मा अवस्यवंः॥ ३९

रक्षमामक्षमं क्षीणमक्षक्षतमशिक्षितम्।
अनाथं दीनमापन्नं दरिद्रन्नीलंलोहित॥ ४०

दुर्मुखं दुष्क्रियं दुष्टं रक्षमामीश दुर्दशम्।
मादृशानामहं न त्वंदन्यं विन्दामि राधंसे॥ ४१

भवाख्येनाग्निना शम्भोराग-द्वेषमदार्चिषा।
दयालो दह्यमानानाँमस्माकंमविता भंव॥ ४२

परदारं परावासं परवस्त्रं पराप्रियम्।
हर पाहि परान्नम्मां पुरुंणामन् पुरुंष्टुत॥ ४३

लौकिकैर्यत्कृतं पुष्टैर्नावमानं सहामहे।
देवेश तव दासेभ्यो भूरिंदा भूरिं देहिनः॥ ४४

लोकानामुपपन्नानां गर्विणामीश पश्यताम्।
अस्मभ्यं क्षेत्रमायुश्च वसुंस्पार्हं तदाभर॥ ४५

याच्ञादौ महतीं लज्जामस्मदीयां घृणानिधे।
त्वमेव वेत्सि नस्तूर्णमिषं स्तोतृभ्य आभर॥ ४६

जाया माता पिता चान्ये मां द्विषन्त्यमतिं कृशम्।
देहि मे महतीं विद्यां रायाविश्वपुषां सह॥ ४७

अदृष्टार्थेषु सर्वेषु दृष्टार्थेष्वपि कर्मसु।
मेरु धन्वन्नशक्तेभ्यो बलं धेहि तनूषु नः॥ ४८

लब्धानिष्टसहस्रस्य नित्यमिष्ट-वियोगिनः।
हृद्रोगं मम देवेशं हरिमाणं च नाशय॥ ४९

ये ये रोगाः पिशाचा वा नरा देवाश्च मामिह।
बाधन्ते देव तान् सर्वान् निबांधस्व महाँ असि॥ ५०

त्वमेव रक्षितास्माकं नान्यः कश्चन विद्यते।
तस्मात्स्वीकृत्य देवेश रक्षाणो ब्रह्मणस्पते॥ ५१

त्वमेवोमापते माता त्वं पिता त्वं पितामहः।
त्वमायुस्त्वं मतिस्त्वं श्रीरुत भ्रातोत नः सखा॥ ५२

यतस्त्वमेव देवेश कर्ता सर्वस्य कर्मणः।
ततः क्षमस्व तत्सर्वं यन्मया दुंष्कृतं कृतम्॥ ५३

त्वत्समो न प्रभुत्वेन फल्गुत्वेन च मत्समः।
अतो देव महादेवं त्वमस्माकं तवस्मसि॥ ५४

सुस्मितं भस्मगौराङ्गं तरुणादित्य-विग्रहम्।
प्रसन्न-वदनं सौम्यं गायेत्वा नमसा गिरा॥ ५५

एष एव वरोस्माकं नृत्यन्तन्त्वां सभापते।
लोकयन्तमुमाकान्तं पश्येम शरदः शतम्॥ ५६

अरोगिणो महाभागा विद्वांसश्च बहुश्रुताः।
भगवन् त्वत्प्रसादेन जीवेम शरदः शतम्॥ ५७

सदारा बन्धुभिः सार्धं त्वदीयं ताण्डवामृतम्।
पिबन्तः काममीशान नन्दाम शरदः शतम्॥ ५८

देव देव महादेव त्वदीयांघ्रिसरोरुहे।
कामं मधुमयं पीत्वा मोदाम शरदः शतम्॥ ५९

कीटा नागाः पिशाचा वा ये वा के वा भवे भवे।
तव दासा महादेव भवाम शरदः शतम्॥ ६०

सभायामीश ते दिव्यं नृत्त-वाद्यकल-स्वनम्।
श्रवणाभ्यां महादेव शृणवाम शरदः शतम्॥ ६१

स्मृतिमात्रेण संसार-विनाशनकराणि ते।
नामानि तव दिव्यानि प्रब्रवाम शरदः शतम्॥ ६२

इषुसन्धानमात्रेण दग्धत्रिपुर धूर्जटे।
आधिभिर्व्याधिभिर्नित्यमजीता: स्याम शरदः शतम्॥ ६३

चारुचामीकराभासं गौरीकुचपदोरसम्।
कदानु लोकयिष्यामि युवानं विश्पतिं कविम्॥ ६४

प्रमथेन्द्रावृतं प्रीतवदनं प्रियभाषिणम्।
सेविष्येहं कदा साम्बं सुभासं शुक्रशोचिषम्॥ ६५




बह्वेनसं मामकृतपुण्यलेशं च दुर्मतिम्।
स्वीकरिष्यति किं त्वीशो नीलग्रीवो विलोहितः॥ ६६

कालशूलानलासक्त-भीतिव्याकुल-मानसम्।
कदा नु द्रक्ष्यतीशो मां तुविग्रीवो अनानतः॥ ६७

गायका यूयमायात यदि रायादिलिप्सवः।
धनदस्य सखेशोयमुपास्मै गायता नरः॥ ६८

आगच्छत सखायो मे यदि यूयं मुमुक्षवः।
स्तुतेशमेनं मुक्त्यर्थमेषविप्रैरभिष्टुतः॥ ६९

पदे पदे पदे देव पदं नः सेत्स्यति ध्रुवम्।
प्रदक्षिणं प्रकुरुतमध्यक्षं धर्मणामिमम्॥ ७०

सर्वं कार्यं युवाभ्यां हि सुकृतं सुहृदौ मम।
अञ्जलिं कुरुतं हस्तौ रुद्राय स्थिर धन्वने॥ ७१

मन्मूर्धन् मरुतामूर्ध्वं भवं चन्द्रार्धमूर्धजम्।
मूर्धघ्नं च चतुर्मूर्ध्नो नमस्या कल्मलींकिनम्॥ ७२

नयने नयनोद्भूत-दहनालीढमन्मथम्।
पश्यतं तरुणं सौम्यं भ्राजमानं हिरण्ययम्॥ ७३

सभायां शूलिनः सन्ध्यानृत्तवाद्यस्वनामृतम्।
कर्णौ तूर्णं यथाकामं पातं गौराविवेरिणे॥ ७४

नासिके वासुकिश्वास-वासिता भासितो रसम्।
घ्रायतं गरलग्रीवमस्मभ्यं शर्म यच्छतम्॥ ७५

स्वस्त्यस्तु सुखिते जिह्वे विद्यादातुरुमापतेः।
स्तवमुच्चतरं ब्रूहि जयतामिव दुन्दुभिः॥ ७६

चेतः पोत न शोचस्त्वं निन्द्यं विन्दाखिलं जगत्।
अस्य नृत्यामृतं शम्भोर्गौरो न तृषितः पिब॥ ७७

सुगन्धिं सुखसंस्पर्शं कामदं सोमभूषणम्।
गाढमालिंग मच्चित्त योषां जारमिव प्रियम्॥ ७८

महामयूखाय महाभुजाय महाशरीराय महाम्बराय।
महाकिरीटाय महेश्वराय महोमहीं सुष्टुतिमीरयामि॥ ७९

यथा कथं चिद्रचिताभिरीश प्रसादतश्चारुभिरादरेण।
प्रपूजयामि स्तुतिभिर्महेश मषाह्वमुग्रं सहमानमाभिः॥ ८०

नमः शिवाय त्रिपुरान्तकाय
जगत्रयीशाय दिगम्बराय।
नमोस्तु मुख्याय हराय शम्भो
नमो जघन्याय च बुध्नियाय॥ ८१

नमोऽविकाराय विकारिणे ते
नमो भवायास्तु भवोद्भवाय।
बहुप्रजात्यन्त विचित्ररूपा
यतः प्रसूता जगतः प्रसूती॥ ८२




तस्मै सुरेशोरुकिरीटनाना-
रत्नावृताष्ठा पदविष्ठराय।
भस्माङ्गरागाय नमः परस्मै
यस्मात्परं नापरमस्ति किञ्चित्॥ ८३

सर्पाधिराजौपधिनाथयुद्ध-
क्षुभ्यज्जटा-मण्डलगह्वराय।
तुभ्यं नमः सुन्दर-ताण्डवाय
यस्मिन्निदंसं च विचैति सर्वम्॥ ८४

मुरारिनेत्रार्चित-पादपद्म-
मुमाङ्घ्रिलाक्षापरिरक्तपाणिम्।

नमामि देवं विषनीळकण्ठं
हिरण्यदन्तं शुचिवर्णमारात्॥ ८५

नमामि नित्यं त्रिपुरारिमेनं
यमान्तकं षण्मुखतातमीशम्।
ललाटनेत्रार्दित-पुष्पचापं
विश्वं पुराणं तमसः परस्तात्॥ ८६

अनन्तमव्यक्तमचिन्त्यमेकं
हरं तमाशाम्बरमम्बराङ्गम्।
अजं पुराणं प्रणमामि योय-
मणोरणीयान् महतो महीयान्॥ ८७

अन्तस्थमात्मानमजं न दृष्ट्वा
भ्रमन्ति मूढा गिरिगह्वरेषु।
पश्चादुदक्दक्षिणतः पुरस्ताँ-
दधस्विंदासी३दुपरिस्विदासी३त्॥ ८८

इमं नमामीश्वरमिन्दुमौलिं
शिवं महानन्दमशोकदुःखम्।
हृदम्बुजे तिष्ठति यः परात्माँ
परीत्य सर्वाः प्रदिशो दिशश्च॥ ८९

रागादिकापथ्यसमुद्भवेन
भग्नं भवाख्येन महामयेन।
विलोक्य मां पालय चन्द्रमौलें
भिषक्तंमन्त्वा भिषजां शृणोमि॥ १०

दुःखाम्बुराशिं सुखलेशहीन-
मस्पृष्टपुण्यं बहुपातकं माम्।
मृत्योः करस्थं भव रक्ष भीतं
पश्चात् पुरस्तादधरादुदक्तात्॥ ११

गिरीन्द्रजाचारुमुखावलोक-
सुशीतया देव तवैव दृष्ट्या।
वयं दयापूरितयैव तूर्णं-
मपो ननावादुरिता तरेम॥ १२

अपारसंसारसमुद्रमध्ये
निमग्नमुत्क्रोशमनल्परागम्।
मामक्षमं पाहि महेश जुष्ट-
मोजिंष्ठया दक्षिणयेवरातिम्॥ १३

स्मरन् पुरासंचित-पातकानि
खरं यमस्यापि मुखं यमारे।

बिभेमि मे देहि यथेष्टमायु-
र्यदि॑ क्षि॒तायु॒र्यदि॑ वा॒ परे॑तः ॥ ९४

सुगन्धिभिः सुन्दरभस्मगौरै-
रनन्तभोगैर्मृदुलैरघोरैः ।
इमं कदालिङ्गति मां पिनाकी
स्थि॒रेभि॒रंगैः॑ पु॒रुरूपं॑ उ॒ग्रः ॥ ९५

क्रोशन्तमीशः पतितं भवाब्धौ
नागास्यमण्डूकमिवातिभीतम् ।
कदा नु मां रक्षति देवदे॒वो
हिर॑ण्यरूप॒ः स॒हिर॑ण्यसन्दृक् ॥ ९६

चारुस्मितं चन्द्रकलावतंसं
गौरीकटाक्षार्हमयुग्मनेत्रम् ।
आलोकयिष्यामि कदा नु देवं-
मादि॒त्यव॑र्णं॒ तम॑सः॒ पर॑स्तात् ॥ ९७




आगच्छतात्राशु मुमुक्षवो ये
यूयं शिवं चिन्तयतान्तराब्जे ।
ध्यायन्ति मुक्त्यर्थमिमं हि नित्य॒ं
वेदान्तवि॒ज्ञान॒सुनिश्चि॒तार्थाः ॥ ९८

आयात यूयं भुवनाधिपत्य-
कामा महेशं सकृदर्चयध्वम्।
एनं पुराभ्यर्च्य हिरण्यगर्भो
भूतस्य जातः पतिरेक आसीत्॥ ९९

ये कामयन्ते विपुलां श्रियं ते
श्रीकण्ठमेनं सकृदानमन्ताम्।
श्रीमानयं श्रीपतिवन्द्यपादः
श्रीणामुदारो धरुणोरयीणाम्॥ १००

सुपुत्रकामा अपि ये मनुष्या
युवानमेनं गिरिशं यजन्ताम्।
यतः स्वयम्भूर्जगतां विधाता
हिरण्यगर्भः समवर्तताग्रे॥ १०१

अलं किमुक्तैर्बहुभिः समीहितं
समस्तमस्याश्रयणेन सिध्यति।
पुरैनमाश्रित्य हि कुम्भसम्भवो
दिवा न नक्तं पलितोयुवाजनि॥ १०२

अन्यत्परित्यज्य ममाक्षिभृंगौ
सर्वं सदैनं शिवमाश्रयेथाम्।

आमोदवानेष मृदुः शिवोयं
स्वादुष्किलायं मधुमां उतायम्॥ १०३

भविष्यसि त्वं प्रतिमानहीनो
विनिर्जिताशेषनरामरश्च।
नमोस्तु ते वाणि महेशमेनं
स्तुहि श्रुतं गर्तसदं युवानम्॥ १०४

यद्यन्मनश्चिन्तयसि त्वमिष्टं
तत्तद्भविष्यत्यखिलं ध्रुवं ते।
दुःखे निवृत्तिर्विषये कदाचि-
द्यक्ष्वामहे सौमनसाय रुद्रम्॥ १०५

अज्ञानयोगादपचारकर्म
यत्पूर्वमस्माभिरनुष्ठितं ते।
तद्देव सोढ्वासकलं दयालो
पितेवं पुत्रान्प्रतिं नो जुषस्व॥ १०६

संसाराख्यक्रुद्धसर्पेण तीव्रै
रागद्वेषोन्मादलोभादिदन्तैः।
दष्टं दृष्ट्वा मां दयालुः पिनाकी
देवस्त्रातात्रायतामप्रयुच्छन्॥ १०७

इत्युक्त्वान्ते यत्समाधेर्नमन्तो
रुद्राद्यास्त्वां यान्ति जन्माहिदष्टाः।
सन्तो नीलग्रीवसूँत्रात्मनाहुं
तत्त्वाँयामि ब्रह्मणवन्दमानः॥ १०८

भवातिभीषणज्वरेण पीडितान् महाभयान-
शेषपातकालयानदूरकाललोचनान्।
अनाथनाथ ते करेण भेषजेन कालहन्नु
दूषणाँ वसो महे मृशस्वं शूर राधसे॥ १०९

जयेम येन सर्वमेतदिष्टमष्टदिग्गजं,
भुवस्थलं नभस्थलं दिवस्थलं च तद्गतम्।
य एष सर्वदेवदानवानतः सभापतिः,
स नाँ ददातु तं रयिं रयिं पिशंगसद्दृशम्॥ ११०

नमो भवाय ते हराय भूतिभासितोरसे,
नमो मृडाय ते हराय भूतभीतिभंगिने।
नमः शिवाय विश्वरूपशाश्वताय शूलिने,
न यस्यं हन्यते सखा न जीयंते कदाँचन॥ १११

सुरपतिपतये नमो नमः
क्षितिपतिपतये नमो नमः प्रजापतिपतये।

नमो नमोम्बिकापतय

उमापतये पशुपतयें नमोनमः ॥ ११२

विनायकं वन्दकमस्तकाहति-

प्रणामसंघुष्टसमस्तविष्टपम् ।

नमामि नित्यं प्रणतार्तिनाशनँ

कविं कवीनामुपमश्रंवस्तमम् ॥ ११३

देवा युद्धे यागे विप्रा

स्वीयां सिद्धिं ह्वायन् ह्वायन् ।

यं सिध्यन्ति स्कन्दं वन्दे

सुब्रह्मण्योगँ सुब्रह्मण्योम् ॥ ११४

नमः शिवायै जगदम्बिकायै

शिवप्रियायै शिवविग्रहायै ।

समुद्बभूवाद्रिपतेः सुताया

चतुंष्कपर्दा युवतिः सुपेशाः ॥ ११५

हिरण्यवर्णां मणिनूपुरांघ्रिं

प्रसन्नवक्त्रां शुकपद्महस्ताम् ।

विशालनेत्रां प्रणमामि गौरीं

वाचोविदं वाचंमुदीरयंन्तीम् ॥ ११६

नमामि मेनातनयाममेया-
मुमामिमां मानवतीं च मान्याम्।
करोति या भूतिसितौ स्तनौ द्वौं
प्रियं सखायं परिषस्वजाना॥ ११७

कान्तामुमाकान्त नितान्तकान्ति-
भ्रान्तामुपान्तानतहर्यजेन्द्राम्।
नतोस्मि यास्ते गिरिशस्य पार्श्वे
विश्वानि देवी भुवनाभिचक्ष्यं॥ ११८

वन्दे गौरीं तुङ्गपीनस्तनीं त्वां
चन्द्राचूडां श्लिष्टसर्वाङ्गरागाम्।
एषा देवी प्राणिनामन्तरात्मा
देवं देवं राधसे चोदयन्ती॥ ११९




एनां वन्दे दीनरक्षाविनोदां
मेनाकन्यामानतानन्ददात्रीम्।
या विद्यानां मङ्गलानां च वाचा-
मेषानेत्री राधसः सूनृतानाम्॥ १२०

भवातिभीतोरुभयापहत्रि
भवानि भोग्याभरणैकभोगैः।

श्रियं परां देहि शिवप्रिये नो॑

यया॑ति॒ विश्वा॑ दुरि॒ता तरे॑म ॥ १२१

शिवे कथं त्वं मतिभिस्तु गीयसे

जगत्कृतिःकेलिरयं शिवः पतिः ।

हरिस्तु दासोनुचरेन्दिरा-शची॒

सर॑स्वती वा सु॒भगा॑द॒दिर्व॑सु ॥ १२२

इमं स्तवं जैमिनिना प्रचोदितं

द्विजोत्तमो यः पठतीशभक्तितः ।

तमिष्टवाक्-सिद्धिमतिद्युतिश्रिय॒ः

परि॑ष्वजन्ते॒ जन॑यो॒ यथा॒पति॒॑म् ॥ १२३

महीपतिर्यस्तु युयुत्सुरादरा-

दिमं पठत्यस्य तथैव सुन्दरम् ।

प्रयान्ति वा शीघ्रमथान्तकान्तिकं॒

भिय॒ं दधा॑ना॒ हृद॑येषु शत्र॑वः ॥ १२४

त्रैवर्णिकेष्वन्यतमो य एनं

नित्यं कदाचित् पठतीशभक्तितः ।

कलेवरान्ते शिवपार्श्ववर्ती

निरंज॒नः साम्यमुपैति दि॒व्यम् ॥ १२५

लभन्ते पठन्तो मतिं बुद्धिकामा
लभन्ते चिरायुस्तथायुष्यकामाः।
लभन्ते पठन्तः श्रियं पुष्टिकामाँ
लभन्ते ह पुत्राँ लभन्तेँ ह पुत्रान्॥ १२६

सूत उवाच

इत्यनेन स्तवेनेशं स्तुत्वासौ जैमिनिर्मुनिः।
स्नेहाश्रुपूर्ण-नयनः प्रणनाम सभापतिम्॥ १२७

मुहुर्मुहुः पिबन्नीश-ताण्डवामृतमागलम्।
सर्वान् कामानवाप्यान्ते गाणपत्यमवाप सः॥ १२८

पादं वाप्यर्धपादं वा श्लोकं श्लोकार्धमेव वा।
यस्तु वाचयते नित्यं समोक्षमधिगच्छति॥ १२९

वेदः शिवः शिवो वेदो वेदाध्यायी सदाशिवः।
तस्मात्सर्वप्रयत्नेन वेदाध्यायिनमर्चयेत्॥ १३०

अधीतविस्मृतो वेदो वेदपादस्तवं पठन्।
स चतुर्वेद-साहस्रपारायणफलं लभेत्॥ १३१

कृपासमुद्रं सुमुखं त्रिनेत्रं
जटाधरं पार्वतिवामभागम्।

सदाशिवं रुद्रमनन्तरूपं
विश्वेश्वरं त्वां हृदि भावयामि॥ १३२

आनन्दनृत्त्य-समये नट-नायकस्य
पादारविन्द-मणि-नूपुर-शिञ्जितानि।
आनन्दयन्ति मदयन्ति विमोहयन्ति
रोमांचयन्ति नयनानि कृतार्थयन्ति॥ १३३




अतिभीषण-कटुभाषण-यमकिंकर-पटली-
कृतताडन-परिपीडन-मरणागम-समये।
उमया सह मम चेतसि यम-शासन-निवसन्
हर शंकर शिव शंकर हर मे हर दुरितम्॥ १३४

॥ इति जैमिनिकृत-वेदपादस्तोत्रं संपूर्णम्॥

॥ शुभम्॥

मुद्रक– सौ.सुधा व.गाडगीळ, शारदा-मुद्रण-सिद्धि-मन्दिरम्,
झेलम,पत्रकारनगर,पुणे ४११०१६ ☎:५६५०१२४



# ॥ शिव-पञ्चाक्षर-स्तोत्रम् ॥

( श्रीशङ्कराचार्य-कृतम् )

नागेन्द्र-हाराय त्रिलोचनाय
भस्माङ्ग-रागाय महेश्वराय।
नित्याय शुद्धाय दिगम्बराय
तस्मै नकाराय नमः शिवाय॥ १

मन्दाकिनी सलिल-चन्दन-चर्चिताय
नन्दीश्वर प्रमथनाथ महेश्वराय।
मन्दारपुष्प-बहुपुष्प-सुपूजिताय
तस्मै मकाराय नमः शिवाय॥ २

शिवाय गौरी-वदनाब्ज-वृन्द-
सूर्याय दक्षाध्वर-नाशकाय।
श्रीनीलकण्ठाय वृषध्वजाय
तस्मै शिकाराय नमः शिवाय॥ ३

वसिष्ठ-कुम्भोद्भव-गौतमार्य-
मुनीन्द्र-देवार्चित-शेखराय।
चन्द्रार्क-वैश्वानर-लोचनाय
तस्मै वकाराय नमः शिवाय॥ ४

यज्ञ-स्वरूपाय जटाधराय
पिनाक-हस्ताय सनातनाय।
दिव्याय देवाय दिगम्बराय
तस्मै यकाराय नमः शिवाय॥ ५

पञ्चाक्षरमिदं पुण्यं यः पठेच्छिव-संनिधौ।
शिवलोकम् अवाप्नोति शिवेन सह मोदते॥ ६



# श्रीशिव-मानसपूजा

( श्रीशङ्कराचार्य-कृता )

रत्नैः कल्पितमासनं हिमजलैः स्नानं च दिव्याम्बरम्
नानारत्नविभूषितं मृगमदामोदाङ्कितं चन्दनम्।
जातीचम्पक-बिल्वपत्र-रचितं पुष्पं च धूपं तथा
दीपं देव दयानिधे पशुपते हृत्कल्पितं गृह्यताम्॥ १

सौवर्णे नवरत्न-खण्ड-रचिते पात्रे घृतं पायसं
भक्ष्यं पञ्चविधं पयोदधि-युतं रम्भाफलं पानकम्।
शाकानामयुतं जलं रुचिकरं कर्पूरखण्डोज्ज्वलं
ताम्बूलं मनसा मया विरचितं भक्त्या प्रभो स्वीकुरु॥ २

छत्रं चामरयोर्युगं व्यजनकं चादर्शकं निर्मलं
वीणा-भेरि-मृदङ्ग-काहलकला-गीतं च नृत्यं तथा।
साष्टाङ्गं प्रणतिः स्तुतिर्बहुविधा ह्येतत् समस्तं मया
सङ्कल्पेन समर्पितं तव विभो पूजां गृहाण प्रभो॥ ३

आत्मा त्वं गिरिजा मतिः सहचराः प्राणाः शरीरं गृहं
पूजा ते विषयोपभोग-रचना निद्रा समाधि-स्थितिः।
सञ्चारः पदयोः प्रदक्षिणविधिः स्तोत्राणि सर्वा गिरो
यद्यत् कर्म करोमि तत्तदखिलं शम्भो तवाराधनम्॥ ४

कर-चरण-कृतं वाक्-कायजं कर्मजं वा
श्रवण-नयनजं वा मानसं वाऽपराधम्।
विहितमविहितं वा सर्वमेतत् क्षमस्व
जय जय करुणाब्धे श्रीमहादेव शम्भो॥ ५